कम्पिल्लनीलिनीकुम्भभागान् द्वित्रिचतुर्गुणान् ॥ १० ॥
पिबेत्सचूर्णं मूत्रेण पेयां पूर्वं ततो रसैः ।
विरक्तो जाङ्गलैस्तात्ततः षड्दिवसं पयः ॥ ११ ॥
शृतं पिबेद् व्योषयुतं पीतमेवं पुनः पुनः ।
हन्ति सर्वोदराख्ये तच्चूर्णं जातोदकान्यपि ॥ १२ ॥
गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेत्कर्कन्धुमृद्वीकाकोलाम्भोमूत्रसीधुभिः ॥ १३ ॥
यवानी हपुषाधान्य शतपुष्पोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शठी वचा ॥ १४ ॥
चित्रकाजाजिकं व्योषं स्वर्णक्षीरी फलत्रयम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ १५ ॥
विडङ्गं च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा ॥ १६ ॥
एष नारायणो नाम चूर्णो रोगगणापहः ।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः ॥ १७ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ।
आनाहवाते सुरया वातरोगे प्रसन्नया ॥ १८ ॥
दधिमण्डेन विट्सङ्गे दाडिमाम्भोभिरर्शसैः ।
परिकर्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ १९ ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ २० ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २१ ॥
हपुषां काञ्चनक्षीरीं त्रिफलां नीलिनीफलम् ।

त्रायन्तीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् ॥२२॥
सैन्धवं काललवणं पिप्पलीं चेति चूर्णयेत् ।
दाडिमत्रिफलामांसरसमूत्रसुखोदकैः ॥ २३ ॥
पेयोऽयं सर्वगुल्मेषु प्लीहसर्वोदरेषु च ।
श्वित्रे कुष्ठे सजरके सदने विषमेऽनले ॥ २४ ॥
शोफार्शःपाण्डुरोगेषु कामलायां हलीमके ।
वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥
नीलिनीं निचुलं व्योषं क्षारौ लवणपञ्चकम् ।
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ २६ ॥
पूर्ववच्च पिबेद् दुग्धं क्षामः शुद्धोऽन्तरान्तरा ।
आरभं शस्यमाजं वा दद्यादात्ययिके गदे ॥ २७ ॥
स्नेहमेव विरेकार्थे दुर्बलेभ्यो विशेषतः ।
हरीतकीसूक्ष्मरजः प्रस्थयुक्तं घृताढकम् ॥ २८ ॥
अग्नौ विलाप्य मथितं खजेन यवपल्लके ।
निधापयेत्ततो मासादुद्धृतं गालितं पचेत् ॥ २९ ॥
हरीतकीनां क्वाथेन दध्ना चाम्लेन संयुतम् ।
उदरं गरमष्ठीलामानाहं गुल्मविद्रधिम् ॥ ३० ॥
हन्त्येतत्कुष्ठमुन्मादमपस्मारं च पानतः ।
स्नुक्क्षीरयुक्ताद्गोक्षीराच्छ्रृतशीतात् खजाहतात् ॥३१॥
यज्जातमाज्यं स्नुक्क्षीरमिद्धं तच्च तथा गुणम् ।
क्षीरद्रोणं सुधाक्षीरप्रस्थार्धेन युतं दधि ॥ ३२ ॥
जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ।
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ॥ ३३ ॥
स्नुक्क्षीरपलकल्केन त्रिवृतापट्पलेन च ।

एषां चानु पिबेत्पेयां रसं स्वादु पयोऽथवा ॥ ३४ ॥
घृते जीर्णे विरिक्तश्च कोष्णं नागरसाधितम् ।
पिबेदम्बु ततः पेयां ततो यूषं कुलत्थजम् ॥ ३५ ॥
पिबेद्रूक्षस्त्र्यहं त्वेव भूयो वाऽप्रतिभोजितः ।
पुनः पुनः पिबेत् सर्पिरानुपूर्व्याऽनयैव च ॥ ३६ ॥
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ।
गुल्मानां गरदोषाणामुदराणां च शान्तये ॥ ३७ ॥
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।
तैल्वकं नीलिनीं सर्पिः स्नेहं वा मिश्रकं पिबेत् ॥३८॥
हृतदोषः क्रमादश्नन् लघुशाल्योदनं प्रति ।
उपयुञ्जीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥
हरीतकीं सहस्रं वा गोमूत्रेण पयोऽनुपः ।
सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥४०॥
पिप्पलीं वर्द्धमानां वा क्षीराशी वा शिलाजतु ।
तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा ॥ ४१ ॥
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ।
मासं युक्तस्तथा हस्तिपिप्पली विश्वभेषजम् ॥ ४२ ॥
विडङ्गं चित्रकं दन्ती चव्यं व्योषं च तैः पयः ।
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ४३ ॥
भोज्यं भुञ्जीत वा मासं स्नुहीक्षीरघृतान्वितम् ।
उत्कारिकां वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥ ४४ ॥
पार्श्वशूलमुपस्तम्भहृद्ग्रहं च समीरणः ।
यदि कुर्यात् ततस्तैलं बिल्वक्षारान्वितं पिबेत् ॥ ४५ ॥
पक्षं वा टिण्टुकयवनापनालं तिलज्यमसे ।

चारैः कदल्यपामार्गतर्कारीजैः पृथक् कृतैः ॥ ४६ ॥
कफे वातेन पित्ते वा ताभ्यां वाप्यावृतेऽनिले ।
बलिनः स्वौषधं युक्तं तैलमैरण्डजं हितम् ॥ ४७ ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः ॥ ४८ ॥
वृश्चिकालीवचाशुण्ठीपञ्चमूलपुनर्नवात् ।
वर्षाभूधान्यकुष्ठाच्च क्वाथैर्मूत्रैश्च सेचयेत् ॥ ४९ ॥
विरिक्तं म्लानमुदरं स्वेदितं साल्वणादिभिः ।
वाससा वेष्टयेदेवं वायुर्नाऽऽध्मापयेत् पुनः ॥ ५० ॥
सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् ।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ५१ ॥
सोपस्तम्भोऽपि वायुराध्मापयति यं नरम् ।
तीक्ष्णाः सक्षारगोमूत्राः शस्यन्ते तस्य बस्तयः ॥ ५२ ॥
इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः ।
वातोदरेऽथ बलिनं विदार्यादिशृतं घृतम् ॥ ५३ ॥
पाययेत् तु ततः स्निग्धं स्वेदिताङ्गं विरेचयेत् ।
बहुशस्तैल्वकेनैव सर्पिषा मिश्रकेण वा ॥ ५४ ॥
कृते संसर्जने क्षीरं बलार्थमवचारयेत् ।
प्रागुत्क्लेशाद् विवर्तेत बले लब्धे क्रमात् पयः ॥ ५५ ॥
यूषैः रसैर्वा मन्दाम्ललवणैरेधितानलम् ।
सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेत् ततः ॥५६॥
तीक्ष्णाधोभागयुक्तेन दाशमूलिकबस्तिना ।
तिल्वोरुबूकतैलेन वातघ्नाम्लशृतेन च ॥ ५७ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ।

रूक्षं बद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥
अविरेच्यस्य शमना बस्तिक्षीरघृतादयः ।
बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥
श्यामात्रिभण्डीत्रिफला विपक्केन विरेचयेत् ।
सितामधुघृताढ्येन निरूहोऽस्य ततो हितः ॥ ६० ॥
न्यग्रोधादिकषायेण स्नेहबस्तिश्च तच्छृतः ।
दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरबस्तिभिः ॥ ६१ ॥
जाते त्वग्निबले स्निग्धं भूयो भूयो विरेचयेत् ।
क्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन तम् ॥ ६२ ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ।
सकफे वा समूत्रेण सतिक्ताढ्येन सानिले ॥ ६३ ॥
पयसान्यतमेनैषां विदार्यादिशृतेन वा ।
भुञ्जीत जठरं चास्य पायसेनोपनाहयेत् ॥ ६४ ॥
पुनः क्षीरं पुनर्बस्तिं पुनरेव विरेचनम् ।
क्रमेण ध्रुवमातिष्ठन्यतः पित्तोदरं जयेत् ॥ ६५ ॥
वत्सकादि विपक्केन कफे संस्नेह्य सर्पिषा ।
स्विन्नं स्नुक्क्षीरसिद्धेन बलवन्तं विरेचितम् ॥ ६६ ॥
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ।
मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितः ॥ ६७ ॥
मुष्ककादिकषायेण स्नेहबस्तिश्च तच्छृतः ।
भोजनं व्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥
स्तैमित्यारुचिहृल्लासैर्मन्देऽग्नौ मद्यपाय च ।
दद्यादरिष्टान् क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥
विड्ङ्गकुष्ठे त्रिफलां देवदारु निशाद्वयम् ।

भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥
शुण्ठीं माद्रीं घनं कुष्ठं सरलं पट्टुपञ्चकम् ।
दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥
अन्तर्धूमं ततः क्षाराद्बिडालपदकं पिबेत् ।
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥ ७२ ॥
उदरं गुल्ममष्ठीलां तून्यौ शोफं विषूचिकाम् ।
प्लीहहृद्रोगगुदजानुदावर्तं च नाशयेत् ॥ ७३ ॥
जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः ।
सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥
उपनाह्य समिद्धार्थकिण्वैर्बीजैश्च मूलकात् ।
कल्कितैरुदरस्वेदमभीक्ष्णं चात्र योजयेत् ॥ ७५ ॥
सन्निपातोदरे कुर्य्यान्नातिक्षीणबलानले ।
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥ ७६ ॥
दन्तीद्रवन्तीफलजं तैलं पाने च शस्यते ।
क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥
दद्यादापृच्छ्य तज्ज्ञातीन् पातुं मद्येन कल्कितम् ।
मूलं काकादनीं गुञ्जां करवीरकसम्भवम् ॥ ७८ ॥
पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ।
यस्मिन् वा कुपितः सर्पो विसृजति फले विषम् ॥ ७९ ॥
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ।
बहिः प्रवर्त्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥
तथा व्रजत्यगदतां शरीरान्तरमेव वा ।
हृतदोषं तु शीताम्बु स्नातं तं पाययेत् पयः ॥ ८१ ॥
पेयां वा त्रिवृतः शाकं मण्डूक्या वास्तुकस्य वा ।

कालशाकं यवाख्यं वा खादेत् स्वरससाधितम् ॥८२॥
निरम्ललवणस्नेहं सिद्धास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैवं तृषितः स्वरसं पिबेत् ॥ ८३ ॥
एष विनिर्दिष्टो शाकेष्वपि मासात् परं ततः ।
दुर्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः ॥ ८४ ॥
प्लीहोदरे यथादोषं स्निग्धस्य स्वेदितस्य च ।
सिरां भुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ॥ ८५ ॥
लब्धे बले च भूयोऽपि स्नेहयेत विशोधितम् ।
समुद्रशुक्तिजं क्षारं पयसा पाययेत्तथा ॥ ८६ ॥
क्षारश्रुतं बिडकणाचूर्णाढ्यं नक्तमालजम् ।
शोभाञ्जनस्य वा क्वाथं सैन्धवाग्निकणान्वितम् ॥ ८७ ॥
हिङ्ग्वादिचूर्णं क्षाराढ्यं युञ्जीत च यथाबलम् ।
पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ॥ ८८ ॥
बिडार्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ।
विडङ्गं चित्रकं सक्तून् सघृतान् सैन्धवं वचाम् ।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ॥ ८९ ॥
तैलोन्मिश्रैर्बदरकपत्रैः समर्दितैः समुपनद्धः ।
सुयत्नेन योऽहितोऽनु याति प्लीहा यथा सुखी नाशम् ॥९०॥
रोहीतकलताः कृत्वा खण्डशः साभयाजले ॥ ९१ ॥
मूत्रे वाऽऽसुनुयात्तत्तु सप्तरात्रस्थितं पिबेत् ।
कामला प्लीहगुल्मार्शः कृमिमेहोदरापहम् ॥ ९२ ॥
रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ९३ ॥
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया ।

हरीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ८४ ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।
कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ॥ ८५ ॥
तैलं पक्वं जयेत्पानात् प्लीहानं कफवातजम् ।
अशान्तौ गुल्मविधिना योजयेदग्निकर्म च ॥ ८६ ॥
अम्लासपिच्छासलिले प्लीह्नि वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ॥ ८७ ॥
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ।
यकृति प्लीहवत्कर्म दक्षिणे तु भुजे सिराम् ॥ ८८ ॥
स्निग्धाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ।
सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥ ८९ ॥
परिस्रंसीनि चान्नानि तीक्ष्णं चार्ध्वं विरेचनम् ।
उदावर्त्तहरं कर्म कार्यं यथानिलापहम् ॥ १०० ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ।
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥ १०१ ॥
अपां दोषहराण्यादौ योजयेदुदकोदरे ।
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥ १०२ ॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ।
क्षारं छागकरीषाणां श्रुतं मूत्रेऽग्निना पचेत् ॥१०३॥
घनीभवति तस्मिंश्च षडंशं चूर्णितं क्षिपेत् ।
पिप्पलीपिप्पलीमूलं शुण्ठीलवणपञ्चकम् ॥ १०४ ॥
निकुम्भकुम्भत्रिफलास्वर्णक्षीरीविषाणिकाः ।
स्वर्जिकाक्षारयष्ट्यन्यासातलायवशूकजम् ॥ १०५ ॥
कोलाभा गुटिकाः कृत्वाः ततः सौवीरकाप्लुताः ।

पिबेदजरके शोफे प्रवृद्धे चोदकोदरे ॥ १०६ ॥
इत्यौषधैरप्रशमे त्रिषु बद्धोदरादिषु ।
प्रयुञ्जीत भिषक् शस्त्रमार्तबन्धुनृपार्थितः ॥ १०७ ॥
स्निग्धस्विन्नतनोर्नाभेरधो बद्धच्युतान्त्रयोः ।
पाटयेदुदरं मुक्त्वा वामतश्चतुरङ्गुलात् ॥ १०८ ॥
चतुरङ्गुलमानं तु निष्कास्यान्त्राणि तेन च ।
निरीक्ष्यापनयेद् बालमश्मलेपोपलादिकम् ॥ १०८ ॥
छिद्रे तु शल्यमुद्धृत्य विशोध्यान्त्रपरिस्रवम् ।
मत्कोटैर्दंशयेच्छिद्रं तेषु लग्नेषु चाहरेत् ॥ ११० ॥
कायं मूर्ध्नोऽनु चान्त्राणि यथास्थानं निवेशयेत् ।
अक्तानि मधुसर्पिर्भ्यामनु सीव्येद् बहिर्व्रणम् ॥ १११
ततः कृष्णमृदा लिप्य बध्नीयाद् यष्टिमिश्रया ।
निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ॥ ११२ ॥
सजले जठरे तैलैरभ्यक्तस्यानिलापहैः ।
उष्णाम्भसाम्बुना कक्षमुदरे परिवेष्टिते ॥ ११३ ॥
बद्धच्छिद्रोदितस्थाने विध्येद्द्व्यङ्गुलमात्रकम् ।
निधाय तस्मिन्नाडीं च स्रावयेदर्धमम्भसः ॥ ११४ ॥
अथास्य नाडीमाकृष्य तैलेन लवणेन च ।
व्रणमभ्यज्य बध्वा च वेष्टयेद्वाससोदरम् ॥ ११५ ॥
तृतीयेऽह्नि चतुर्थे वा यावद्षोडशमं दिनम् ।
तस्य विस्राव्य विस्राव्य स्रावयेदल्पशो जलम् ॥ ११६
विवेष्टयेद्गाढतरं जठरं च यथाक्रमम् ।
निःसृते लङ्घितः पेयामस्नेहलवणां पिबेत् ॥ ११७ ॥
स्यात क्षीरवृत्तिः षण्मासांस्त्रीन् पेयां पयसा पिबेत् ।

नीरोगान् पयसैवाद्यात् फलाम्लेन रसेन वा ॥११८॥
अल्पशः स्नेहलवणं जीर्णं श्यामाककोद्रवम् ।
प्रयतो वत्सरेणैवं विजयेत् तज्जलोदरम् ॥ ११९ ॥
वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ।
सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ॥ १२० ॥
अतो वातादिशमनी क्रिया सर्वा प्रशस्यते ।
वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥
तस्माद्दीप्यानि भोज्यानि दीपनानि लघूनि च ।
सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ १२२ ॥
भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥ १२३ ॥
पिबेदिक्षुरसं चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा ॥१२४॥
अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ।
गुडं तैलकृतं शाकं वारिपानावगाहयोः ॥ १२५ ॥
आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ।
नात्यर्थसान्द्रं मधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥
सकणालवणं वाते पित्ते सोषणशर्करम् ।
यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे ॥ १२७ ॥
त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १२८ ॥
प्लीह्नि बद्धे तु हपुषायवानीपटुजाजिभिः ।
सकृष्णा माक्षिकं छिद्रे व्योषवत् सलिलोदरे ॥१२९॥
गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ।

तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ १३० ॥
प्रयोगाणां च सर्वेषामनुक्षीरं प्रयोजयेत् ।
स्थैर्य्यकृत् सर्वधातूनां बल्यं दोषानुबन्धहृत् ।
भिषजोपचिताङ्गानां क्षीरमेवामृतायते ॥ १३१ ॥

---

## षोड़शोऽध्यायः ।

---

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः ।
पाण्डुरामयी पिबेत् सर्पिरादौ कल्याणकाह्वयम् ।
पञ्चगव्यं महातिक्तं घृतं वाऽऽरग्वधादिना ॥ १ ॥
दाडिमात् कुडवो धान्यात् कुडवार्द्धं पलं पलम् ।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यर्द्धपलं च तैः ॥ २ ॥
कल्कितैर्विंशतिपलं घृतस्य सलिलाढके ।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्त्तिनुत् ॥ ३ ॥
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ।
दुःखप्रसविनीनां च वन्ध्यानां च प्रशस्यते ॥ ४ ॥
स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ।
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥ ५ ॥
दन्तीफलरसे कोष्णे काश्मर्याञ्जलिमासुतम् ।
द्राक्षाञ्जलिं वा मृदितं तत् पिबेत् पाण्डुरोगजित् ।
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम् ।
मर्द्दलोपोविहण्याभाभद्रदारुमहौषधम् ॥ ७ ॥

गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥ ८ ॥
मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ९ ॥
शुद्धयोभयतो लिह्यात् पथ्यां मधुघृतद्रुताम् ।
विशालां कटुकां मुस्तां कुष्ठं दारुकलिङ्गकः ॥ १० ॥
कर्षांशाद्विपिचुर्मूर्वा कर्षार्द्धांशा घुणप्रिया ।
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात् ततो मधु ॥ ११ ॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत् ॥ १२ ॥
वासागुडूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामलाः ॥१३॥
व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः ।
चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितम् ॥ १४ ॥
कामलापाण्डुहृद्रोगकुष्ठार्शो मेहनाशनम् ।
गुडनागरमण्डूरतिलांशाम्भानतः समान् ॥ १५ ॥
पिप्पली द्विगुणान् दद्याद् गुटिकां पाण्डुरोगिणे ।
ताप्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ॥ १६ ॥
व्योषादि नवकं चैतच्चूर्णयेद् द्विगुणं ततः ।
मण्डूरं चाञ्जननिभं सर्वतोऽष्टगुणेऽथ तत् ॥ १७ ॥
पृथग् विपक्वे गोमूत्रे वटकीकरणक्षमे ।
प्रक्षिप्य वटकान् कुर्यात् तान् खादेत्तक्रभोजनः ॥१८॥
एते मण्डूरवटकाः प्राणदाः पाण्डुरोगिणाम् ।
कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम् ॥ १९ ॥

कनीयः पञ्चमूलाम्बु शस्यते पानभोजने ।
पाण्डूनां कामलार्त्तानां मृद्वीकामलकाद्रसः ॥ ३२ ॥
इति सामान्यतः प्रोक्तं पाण्डुरोगभिषग्जितम् ।
विकल्प्य योज्यं विदुषा पृथग्दोषबलं प्रति ॥ ३३ ॥
स्नेहप्रायं पवनजे तिक्तशीतन्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णं विमिश्रं सान्निपातिके ॥ ३४ ॥
मृदं निर्य्यातयेत् कायात्तीक्ष्णैः संशोधनैः पुरः ।
बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत् ॥ ३५ ॥
व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥ ३६ ॥
वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान् प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ ३७ ॥
तद्वत् केसरयष्ट्याह्वपिप्पलीक्षीरशाड्वलैः ।
मृद्व्क्षेपणाय तच्छौल्ये वितरेद्भावितां मृदम् ॥ ३८ ॥
विल्वाग्निनिम्बप्रसवैः पाठया मूर्वयाऽथवा ।
मृद्देद्भिद्दोषाशुगमायोज्यं च भेषजम् ॥ ३९ ॥
कामलायां तु पित्तघ्नं पाण्डुरोगाविरोधि यत् ।
पथ्याशतरसे पथ्यावृन्ताद्विशतकल्कितः ॥ ४० ॥
प्रस्थः सिद्धो घृताद्गुल्मकामलापाण्डुरोगनुत् ।
आरग्वधं रसेनेक्षोर्विदार्य्यामलकस्य वा ॥ ४१ ॥
सत्र्यूषणं बिल्वमात्रं पाययेत् कामलापहम् ।
पिबेद्दिकुम्भकल्कं वा द्विगुणं शीतवारिणा ॥ ४२ ॥
कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥४३॥

प्रातः प्रातर्मधुयुतं कामलार्त्ताय योजयेत् ।
निशागैरिकधात्रीभिः कामलापहमञ्जनम् ॥ ४४ ॥
तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम् ।
कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ४५ ॥
रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ।
कफसम्मूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥ ४६ ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ४७ ॥
दौर्बल्याल्पाग्निपार्श्वार्त्तिहिध्माश्वासारुचिज्वरैः ।
क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ ४८ ॥
रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ।
शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ४९ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णञ्च शस्यते ।
सबीजपूरकरसं लिह्याद्व्योषं तथाश्रयम् ॥ ५० ॥
स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते ।
वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ ५१ ॥
निवृत्तोपद्रवस्यास्य कार्य्यः कामलिको विधिः ।
गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु ॥ ५२ ॥
मासं माक्षिकधातुं वा किट्टं चाप्यहिरण्यजम् ।
गुडूचीस्वरसक्षीरसाधितेन हलीमकी ॥ ५२ ॥
महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु ।
विवृता तद्विरिक्तोऽश्नीयात् स्वादु पित्तानिलापहम् ॥ ५४ ॥
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ।
यापनान् क्षीरबस्तींश्च शीलयेत् सानुवासनान् ॥ ५५ ॥

मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ।
कासिकं चाभयालेहं पिप्पलीमधुकं बलाम् ॥ ५६ ॥
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ।
पाण्डुरोगेषु कुशलः शोफोक्तञ्च क्रियाक्रमम् ॥ ५७ ॥

---

## सप्तदशोऽध्यायः ।

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः ।
सर्वत्र सर्वाङ्गसरे दोषजे श्वयथौ पुरा ।
सामे विशोषितो भुक्त्वा लघुकोष्णाम्भसा पिबेत् ॥ १ ॥
नागरातिविषादारुविडङ्गेन्द्रयवोषणम् ।
अथवा विजयाशुण्ठीदेवदारुपुनर्नवम् ॥ २ ॥
नवायसं वा दोषाढ्यः शुद्धो मूत्रहरीतकीः ।
वराक्वाथेन कट्काकुम्भायश्चूर्णानि वा ॥ ३ ॥
अथवा गुग्गुलुं तद्वज्जतु वा शैलसम्भवम् ।
मन्दाग्निः शीलयेदामगुरुभिन्नविबद्धविट् ॥ ४ ॥
तक्रं सौवर्चलव्योषक्षौद्रयुक्तं गुडाभयम् ।
तक्रानुपानमथवा तद्वद्वा गुडनागरम् ॥ ५ ॥
आर्द्रकं वा समगुडं प्रकुञ्चार्धविवर्धितम् ।
परं पञ्चपलं मासं यूषक्षीररसाशनः ॥ ६ ॥
गुल्मोदरार्शःश्वयथुप्रमेहान् श्वासप्रतिश्यायलसकाविपाकान् ।
सकामलाशोषमनोविकारान् कासं कफं च जयेत्प्रयोगः ॥ ७ ॥
घृतमार्द्रकनागरस्य कल्कस्वरसाभ्यां पयसा च साधयित्वा ।
श्वयथुप्रबलोदराग्निसादैरभिभूतोऽपि दिवम् भवत्यरोगः ॥ ८ ॥

निरामो बद्धगमनः पिबेच्छ्वयथुपीडितः ।
त्रिकटुत्रिफलादन्तीचित्रकैः साधितम्पयः ॥ ८ ॥
मूत्रं गोर्वा महिष्या वा सक्षीरं क्षीरभोजनः ।
सप्ताहं मासमथवा स्याद्दुष्टीक्षीरवर्त्तनः ॥ १० ॥
यवानकं यवक्षारं यवानीं पञ्चकोलकम् ।
मरिचन्दाडिमम्पाठां धानकामम्लवेतसम् ॥ ११ ॥
बालबिल्वञ्च कर्षांशं साधयेत् सलिलाढ़के ।
तेन पक्को घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ १२ ॥
दृश्चिवकगर्भाद्वा घृतं तत्तक्रसंयुतम् ।
पक्वं सचित्रक तद्दगुणैर्युक्ताश्च कालवित् ॥ १३ ॥
धान्वन्तरं महातिक्तं कल्याणमभयाघृतम् ।
दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥
दत्त्वा गुड़तुलां तस्मिन् लेहे दद्याद्विचूर्णितम् ।
त्रिजातक त्रिकटुक किञ्चिच्च यवशूकजम् ॥ १५ ॥
प्रस्थार्द्धञ्च हिमे क्षौद्रात्तं निहन्त्युपयोजितम् ।
प्रहद्गोफज्वरमेहगुल्मकार्श्यामवाताम्लकरक्तपित्तम् ।
वैवर्ण्यमूत्रानिलशुक्रदोषश्वासारुचि प्लीहगरोदरञ्च ॥१६॥
पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम् ।
अल्पमल्पं पटुस्नेहं भोजनं श्वयथोर्हितम् ॥ १७ ॥
सारण्यौपाम्बितैर्मांसैः कौमलैः सकणैः रसैः ।
तथा जाङ्गलजैः कूर्मगोधागव्यकलैरपि ॥ १८ ॥
यनन्नं मथित पाने मद्यान्योपधयन्ति च ।
धन्नाजीमठोजीवन्ती कारवी,पौष्कराग्निकैः ॥ १८ ॥
बिल्वमध्ययवक्षारवाक्यैर्मदरोन्मितैः ।

क्षता पेयाऽऽज्यतैलाभ्यां युक्तिभृष्टा परं हिता ॥ २० ॥
शोफातिसारहृद्रोगगुल्मार्शोऽरुच्यग्निमेहिनाम् ।
गुणैस्तद्वच्च पाठाद्याः पञ्चकोलेन साधिता ॥ २१ ॥
शैलेयकुष्ठ स्थौणेयरेणुकागुरुपद्मकैः ।
श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुभिः ॥ २२ ॥
मांसी मागधिका वन्यधान्यध्यामकबालकैः ।
चतुर्जातकतालीसमुस्तागन्धपलाशकैः ॥ २३ ॥
कुर्यादभ्यञ्जनं तैलं लेपं स्नानाय तूदकम् ।
स्नानं वा निम्बवर्षाभूनक्तमालार्कवारिणा ॥ २४ ॥
एकाङ्गशोफे वर्षाभूकरवीरककिंशुकैः ।
विशालात्रिफलारोध्रनलिकादेवदारुभिः ॥ २५ ॥
हिंस्राकोशातकी भार्ङ्गी तालपर्णी जयन्तिभिः ।
स्थूलकाकादनीशालनाकुलीवृषपर्णिभिः ॥ २६ ॥
वृहद्विहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम् ।
पयानिलोत्थे श्वयथौ मासार्धं त्रिवृत पिबेत् ॥ २७ ॥
तैलमैरण्डजं वातविड्विबन्धे तदेव तु ।
प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत् तथा ॥ २८ ॥
स्वेदाभ्यङ्गान् समीरघ्नान् लेपमेकाङ्गगे पुनः ।
मातुलुङ्गाग्निमन्थेन शुण्ठी हिंस्रामराह्वयैः ॥ २९ ॥
पैत्ते तिक्तं पिबेत् सर्पिर्न्यग्रोधाद्येन वा शृतम् ।
क्षीरं दद्याद्धमोहेषु लेपाभ्यङ्गाश्च शीतलाः ॥ ३० ॥
पटोलमूलत्रायन्ती यष्ट्याह्वकटुकाभयाः ।
दारुदार्वीहिम दन्ती विशाला निचुलं कणा ॥ ३१ ॥
तैः क्वाथः सघृतः पीतो हन्त्यन्तस्तापदाहभ्रमान् ।

ससन्निपातवीसर्पशोफदाहविषज्वरान् ॥ ३२ ॥
आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ।
स्रोतोविबन्धे मन्देऽग्नावरुचौ स्तिमिताशयः ॥ ३३ ॥
भारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसी: ॥ ३४ ॥
प्रलेपोऽमर्दने युञ्ज्यात् सुखोष्णा मूत्रकल्किता: ।
स्नानं मूत्राम्भसि सिद्धे कुष्ठतर्कारिचित्रकैः ॥ ३५ ॥
कुलत्थनागराभ्यां वा चण्डागुरुविलेपने ।
कालाजशृङ्गीसरलवस्तगन्धाह्वयाह्वया: ॥ ३६ ॥
एकैषिका च लेपः स्यात् श्वयथाविकमावजे ।
यथादोषं यथासन्नं शुद्धिं रक्तावसेचनम् ।
कुर्वीत मिश्रदोषे तु दोषोद्रेकबलात् क्रियाम् ॥ ३७ ॥
अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्य: सुखतोयपीता: ।
शोफं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च ॥३८॥
अमृताद्वितयं शिवाटिका सुरकाष्ठं समुरं मगोजलम् ।
श्वयथूदरकुष्ठपाण्डुता कृमिमेहार्शकफानिलापहम् ॥३९॥
इति निजमधिकृत्य पथ्यमुक्तं चतजनिते चतजं विशोधनीयम् ।
मुनिविमघृतलेपसेकरेकैर्विषजनितं विषनित् शोफदृष्टम् ॥४०
ग्राम्यानूपं पिशितमबलं शुष्कशाकं तिलान्नम्
गौडं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम् ।
धानावल्लूरसमशनमथो गुर्वसात्म्यं विदाहि
स्वप्नं रात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च ॥ ४१ ॥

—*—

# अष्टादशोऽध्यायः ।

अथातो विसर्पचिकित्सितं व्याख्यास्यामः ।
आदावेव विसर्पेषु हितं लङ्घनरूक्षणम् ।
रक्तावसेको वमनं विरेकः स्नेहनं न तु ॥ १ ॥
प्रच्छर्दनं विसर्पघ्नं सयष्टीन्द्रयवं फलम् ।
पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ २ ॥
रसेन युक्तं त्रायन्त्या द्राक्षायास्त्रैफलेन वा ।
विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥
योज्यं कोष्ठगते दोषे विशेषेण विशोधनम् ।
अविशोध्यस्य दोषेऽल्पे शमनं चन्दनोत्पलम् ॥ ४ ॥
मस्तुनिम्बपटोलं वा पटोलादिकमेव वा ।
सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥
दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ।
पाक्यं शीतकषायं वा तृष्णावीसर्पवान् पिबेत् ॥ ६ ॥
दार्वीपटोलकटुकामसूरत्रिफलास्तथा ।
सनिम्बयष्टीत्रायन्तीः क्वथिता घृतमूर्च्छिताः ॥ ७ ॥
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ।
त्वग्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥
निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम् ।
घृतं तिक्तं महातिक्तं शृतं वा त्रायमाणया ॥ ९ ॥
निर्हृतेऽस्रे विशुद्धेऽन्तर्दोषे त्वग्मांससन्धिगे ।
बहिःक्रियाः प्रदेहाद्याः सद्यो वीसर्पशान्तये ॥ १० ॥

शताह्वामुस्तवाराहीवंशार्तगलधान्यकम्।
सुराह्वा कृष्णगन्धा च कुष्ठं वा लेपनं चले ॥ ११ ॥
न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम्।
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ॥ १२ ॥
विसग्रन्थिश्च लेपः स्यात् शतधौतघृताप्लुतः।
पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा ॥ १३ ॥
शङ्खः प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम्।
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ॥ १४ ॥
नलमूलान्यनन्ता च लेपः श्लेष्मविसर्पहा।
धवसप्ताह्वखदिरदेवदारुकुरण्टकम् ॥ १५ ॥
समुस्तारग्वधं लेपो वर्गो वा वरुणादिकः।
आरग्वधस्य पत्राणि त्वचः श्लेष्मान्तकोद्भवाः ॥ १६ ॥
इन्द्राण्यौ शाकं काकाह्वाशिरीषकुसुमानि च।
सेकप्रधार्घ्यद्गुविलेपचूर्णान् यथायथम् ॥ १७ ॥
एतैरेवौषधैः कुर्याद्वायौ लेपा घृताधिकाः।
कफस्थानगते सामे पित्तस्थानगतेऽथवा ॥ १८ ॥
आशीतोष्णा हिता रूक्षा रक्तपित्ते घृतान्विताः।
अत्यर्थशीतास्तनवस्तनुवस्त्रान्तराश्रिताः ॥ १९ ॥
योज्याः व्रणे व्रणेऽन्येऽन्ये मन्दवीर्यास्त एव च।
संसृष्टदोषे संसृष्टमेतत् कर्म प्रशस्यते ॥ २० ॥
शतधौतघृतेनाग्निं प्रदिह्यात् केवलेन वा।
सेचयेद्वा वतमण्डेन शीतेन मधुकाम्बुना ॥ २१ ॥
शीताम्भसा पञ्चजलैः क्षीरैरिक्षुरसेन वा।
पानलेपनसेकेषु महातिक्तं परं हितम् ॥ २२ ॥

ग्रन्थ्याख्ये रक्तपित्तघ्नं कृत्वा सम्यग् यथोदितम् ।
कफानिलघ्नं कर्मेष्टं पिण्डस्वेदोपनाहनम् ॥ २३ ॥
ग्रन्थिवीसर्पशूले तु तैलेनोष्णेन सेचयेत् ।
दशमूलविपक्वेन तद्वन्मूत्रैर्जलेन वा ॥ २४ ॥
सुखोष्णया प्रदिह्याद्वा पिष्टया कृष्णगन्धया ।
नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥ २५ ॥
दन्तीचित्रकमूलत्वक्सौधार्कपयसी गुडः ।
भल्लातकास्थिकासीसलेपो भिन्द्यात् शिलामपि ॥२६॥
वह्निर्मार्गास्थितं ग्रन्थिं किं पुनः कफसम्भवम् ।
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ २७ ॥
मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः ।
गोधूमान्नैर्यवान्नैश्च ससीधुमधुशर्करैः ॥ २८ ॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ।
त्रिफलायाः प्रयोगैश्च पिप्पल्याः क्षौद्रसयुतैः ॥ २९ ॥
देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ।
तप्तायोहेमलवणपाषाणादिप्रपीडनैः ॥ ३१ ॥
याभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥
अथास्य दाहः क्षारेण शरैर्हेम्नापि वा हितः ।
पाकिभिः पाचयित्वा तु पाटयित्वा तमुद्धरेत् ॥ ३३ ॥
मोक्षयेद् बहुशश्चास्य रक्तमुत्क्लेशमागतम् ।
पुनश्चापहृते रक्ते वातघ्नं कर्म पित्तदोषघ्नम् ॥ ३४ ॥

प्रक्लिन्ने दाहपाकाभ्यां बाह्यान्तर्व्रणवत्क्रिया ।
दार्वीविडङ्गकम्पिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥
दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ।
एकतः सर्वकर्माणि रक्तमोक्षणमेकतः ॥ ३६ ॥
विसर्पो नखसंसृष्टः सोऽस्रपित्तेन जायते ।
रक्तमेवाव्ययास्य बहुशोऽस्रं हरेदतः ॥ ३७ ॥
न घृतं बहुदोषाय देयं यन्न विरेचनम् ।
तेन दोषो ह्युपस्तब्धस्त्वक्रक्तपिशितं पचेत् ॥ ३८ ॥

---

## एकोनविंशोऽध्यायः ।

कण्डूपाण्ड्वामयान् गण्डान् दुष्टनाडीव्रणापचीः ॥५॥
विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि ।
हृद्रोगतिमिरव्यङ्गग्रहणीश्वित्रकामलाः ॥ ६ ॥
भगन्दरमपस्मारमुदरं प्रदरं गरम् ।
अर्शोऽस्रपित्तमन्यांश्च सुकृच्छ्रान् पित्तजान् गदान् ॥७॥
सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ।
त्रिफला पद्मकं पाठा रजन्यौ सारिवे कणे ॥ ८ ॥
निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृताः ।
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥
पटोलातिविषामुस्तात्रायन्तीधन्वयासकम् ।
तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥
सिद्धं तिक्तमहातिक्तं गुणैरभ्यधिकं मतम् ।
कफोत्तरे घृतं सिद्धं निम्बसप्ताह्वचित्रकैः ॥ ११ ॥
कुष्ठोषणवचाशालप्रियालचतुरङ्गुलैः ।
सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥
स्नेहं घृतं वा कृमिजित्पथ्याभल्लातकैः शृतम् ।
आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३ ॥
पिबन् कुष्ठं जयत्याशु भजन् सखदिरं जलम् ।
एभिरेव यथास्वं च स्नेहैरभ्यञ्जनं हितम् ॥ १४ ॥
स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम् ।
ललाटहस्तपादेषु सिराश्चास्य विमोक्षयेत् ॥ १५ ॥
प्रच्छानमल्पके कुष्ठे शृङ्गाद्यैश्च यथायथम् ।
स्नेहैरापाययेच्चैनं कुष्ठैरन्तरान्तरा ॥ १६ ॥
मुहुस्तनिरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः ।

प्रभञ्जनस्तथा ह्यस्य न स्याद्देहप्रभञ्जन ॥ १७ ॥

धात्र्यामलानिम्बपटोलत्वग्वीकारञ्जोदककल्कपक्वम् ।

सर्पिर्विसर्पज्वरकामलास्रकुष्ठापह पञ्चकमामनन्ति ॥ १८ ॥

त्रिफलात्रिकटुद्विकण्टकारिकटुकाकुम्भनिकुम्भराजवृक्षै ।

सवचातिविषाग्निकै सपाठै पिचुभागैर्द्विपलश्चदुग्धसुध्या ॥१९

पिष्टै सिद्ध सर्पिष प्रस्थमेभि क्रूरे कोष्ठे स्नेहन रेचन च ।

कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्हन्यात्कृच्छ्रान्सन्महावृक्षकाख्यम

दन्त्याढकमपा द्रोणे पक्त्वा तेन घृत पचेत् ।

धामार्गवफले पीत तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥

आवर्त्तकीतुला द्रोणे पचेदष्टांशशेषितम् ।

तन्मूलैस्तत्र निर्यूहे घृतप्रस्थ विपाचयेत् ॥ २२ ॥

पीत्वा तदेकदिवसान्तरित सुजीर्णे

भुञ्जीत कोद्रवसुसस्कृतकाञ्जिकेन ।

कुष्ठ किलासमपचीश्च विजेतुमिच्छन्

इच्छन्प्रजाश्च विपुला ग्रहण स्मृतिश्च ॥ २३ ॥

यवैर्लेलीतकवसा क्षौद्रजातीरसान्विता ।

कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका ॥ २४ ॥

शालयो यवगोधूमा कोरदूषा प्रियङ्गवा ।

मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ॥ २५ ॥

वरापटोलखदिरनिम्बारुष्करयोजितम् ।

मण्डान्यौषधगर्भाणि मथित चेन्दुराजिमत ॥ २६ ॥

अन्नपान हित कुष्ठे न त्वम्ललवणोषणम ।

दधिदुग्धगुडानूपतिलमाषास्त्यजेत्तराम ॥ २७ ॥

पटोलमूलत्रिफलाविशाला पृथक्त्रिभागा पचितत्रिमाषा ।

स्वस्थायमाला कटुरोहिणी च भागार्द्धिके नागरपादयुक्ते २८॥
एतत्फलं जर्ज्जरितं विपक्वं जले पिबेद्दुष्टविशोधनाय।
जीर्णे रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत॥ २९॥
कुष्ठं किलासं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च।
षड्भाविधोगेन निहन्ति चैतद्ध हृद्वस्तिशूलं विषमज्वरञ्च ३०
विडङ्गसारामलकाभयानां पलत्रयं चोषि पलानि कुम्भात्।
गुडस्य च द्वादशमासमेष जितात्मना हन्त्युपयुज्यमानः॥३१॥
कुष्ठ श्वित्र श्वासकासोदरार्शोमेहप्लीहग्रन्थ्यरुक्जन्तुगुल्मान्।
मिद्धं योगं प्राह यचौ मुमुक्षोर्भिक्षोः प्राणाम्नाणिभद्रः किलेमम्

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः।
मूर्वा पटोलौ द्विनिशा पाठानिक्तेन्द्रवारुणीः॥ ३३॥
मकलिङ्गयवात्मुल्या द्विगुणाश्च यथोत्तरम्।
लिह्याद्दन्तो त्रिवृद्द्राक्षाश्चूर्णिता मधुसर्पिषा॥ ३४॥
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम्।
वराविडङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः॥ ३५॥
काकोदुम्बरिकाविल्वनिम्बाब्दव्योषकल्कवान्।
हन्ति मधकनिर्यूहः पानात्सर्वांस्त्वगामयान्॥ ३६॥
कुटजाग्निनिम्बपतकखदिरामनबाणपर्गनिर्यूहे।
सिद्धा मधुवृतयुक्ताः क्रुटघ्नोर्भनयेदभया।
दार्वीखदिरनिम्बानां त्वक् क्वाथः कुष्ठसूदन॥ ३७॥
त्रिफलाविल्वपटोलमूलतिक्तावचारोहिणीपटीवराभिः।
कृतः कषायः कफपित्तकुष्ठं सुसेवितो धर्म्म इवोच्छिनत्ति ३८
एभिरेव च शृतं घृतमुच्चैर्भेषजैर्जयति मारुतकुष्ठम्।
कल्पयेत् खदिरनिम्बगुडूचीदेवदारुरजनीः घृतमेवम्॥ ३९

पाठादार्वीवह्निघुणेष्टाकटुकाभि
र्मूत्रं युक्तं शक्रयवैश्चाप्यनलं च ।
कुष्ठी पीत्वा मासमरुक् स्याद्गुदकीली
मेही शोफी पाण्डुरजीर्णी क्रिमिमांश्च ॥ ४० ॥

लाक्षादन्तीमधुरसत्वराह्वीपिपाठाविडङ्गं
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम् ।
रक्षानिम्ब सुरतरुकृत पञ्चमूल्यौ च चूर्णम्
पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम् ॥४१॥

निशाकणानागरवेल्लतीवरं
मवाक्षिकाप्य क्रमशो विवर्धितम् ।
गवाम्बु पीतं वटकीकृतं तथा
निहन्ति कुष्ठानि सुदारुणान्यपि ॥ ४२ ॥

त्रिकटूत्तमानिलाक्षाराज्यमाक्षिकसितोपला विहिता ।
गुटिका रसायनं स्यात्कुष्ठजिच्च तथा च समसमा ॥ ४३ ॥

चन्दनमालाग्निरजनीविडङ्गतुवराब्दकण्टकारित्रिफलाभिः ।
वटका गुडांशप्लुताः समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥४४॥

विडङ्गभल्लातकवाकुचीनां सद्वीपिदार्वीहरीतकीनाम् ।
सलाङ्गलीकृष्णतिलोपकुल्या गुडेन पिण्डी विनिहन्ति कुष्ठम्॥४५॥

शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला कुष्ठानि कृच्छ्राणि निहन्ति लीढा

सितातिलक्रिमिघ्नानि धात्र्यायामलपिप्पलीः ।
लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ४९ ॥
मुस्तं व्योषं त्रिफला मञ्जिष्ठादारुपञ्चमूले द्वे ।
सप्तच्छदनिम्बत्वक्सविशालाचित्रकोमूर्वा ॥ ५० ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ।
नित्यं कुष्ठनिवर्हणमेतत्प्रायोगिकं खादन् ॥ ५१ ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
पर्म भगन्दरपिडकाकण्डूकोठापचीर्हन्ति ॥ ५२ ॥
रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ।
भल्लातकं बाकुचिकां वह्निमूलं शिलाह्वयम् ॥ ५३ ॥
इति दोषे विजितेऽन्तस्त्वक्स्थे शमनं बहिः प्रलेपादिहितम् ।
तीक्ष्णालेपोत्क्लिष्टं कुष्ठं हि विवर्द्धिमेति मलिने देहे ॥५४॥
स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः ।
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिम्पेत् ॥ ५५ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु ।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्यम् ॥ ५६ ॥
लेपोऽतिकठिने परुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीतागदस्य कार्यो विषैः समन्त्रो गदेयाशु ॥ ५७ ॥
स्तब्धातिसुप्तसुप्तान्यस्वेदनकण्डूलानि कुष्ठानि ।
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५८ ॥
मुस्तात्रिफलामदनं करञ्ज आरग्वधकलिङ्गयवाः ।
ससाह्वकुष्ठकनिलीदार्वी सिद्धार्थकं स्नानम् ॥ ५९ ॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्घर्षः ।
त्वग्दोषकुष्ठशोफप्रशमनः पाण्डुरोगघ्नः ॥ ६० ॥

करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम्।
मूत्रे दर्वीलेपी क्वाथो लेपेन कुष्ठघ्नः ॥ ९१ ॥
श्वेतकरवीरमूलं कुटजकरञ्जात् फलं त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ९२ ॥
शैरिषीत्वक्पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥ ९३ ॥
व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रककुष्ठैः।
कोलमात्रगुटिकार्द्रविपाण्याः श्वित्रकुष्ठहरणो वरलेपः ॥ ९४ ॥
निम्बं हरिद्रे सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारुशिग्रू।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्यात् ॥ ९५ ॥

तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत।
तेनास्य कण्डूपिडकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ९६ ॥

मुस्तामृतासङ्गकटङ्कटेरीकासीसकम्पिल्लककुष्ठलोध्राः।
गन्धोपलः सर्जरसो विडङ्गं मनःशिलाले करवीरकत्वक् ॥ ९७ ॥

तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम्।
दद्रुः सकण्डूः किटिभानि पामा
विचर्चिका चैति तथा न सन्ति ॥ ९८ ॥

स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ९९ ॥
मनःशिलालेमरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः।
तथा करञ्जप्रपुन्नाटबीजं कुष्ठान्वितं गोसलिलेन पिष्टम् ॥ १०० ॥

गुग्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः ।
श्रीवेष्टकालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः ॥ ७१ ॥
उभयहरिद्रासहितैर्यामिकतैलेन मिश्रितैरेभिः ।
दिनकरकराभितप्तैः कुष्ठं दृष्टञ्च नष्टञ्च ॥ ७२ ॥
मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम् ।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ७३ ॥
तेनालिप्तं सिध्मसप्ताहाद् घर्मसेविनोऽपैति ।
मासान्नवं किलासं स्नानेन विना विशुद्धस्य ॥ ७४ ॥
मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गात् सिध्मनाशनम् ॥ ७५ ॥
वायसजङ्घामूलं वमनीपत्राणि मूलकाद्बीजम् ।
तक्रेण भौमवारे लेपः सिध्मापहः सिद्धः ॥ ७६ ॥
जीवन्तीमञ्जिष्ठादार्वी कम्पिल्लकं पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः ॥ ७७ ॥
देयः समधूच्छिष्टो विपादिका तेन नश्यति घृता ।
चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकञ्च ॥ ७८ ॥

मूलसप्ताह्वाह्वयकरवीरपाम्यमारा-
दूर्वार्कमालत्यारग्वधकास्फोतनिम्बात् ।
बीजं कारञ्जं सार्षपं प्रापुनाटं
मैढा अम्बुघ्नं चूर्णयेद्वे हरिद्रे ॥ ७९ ॥
तिलतैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यङ्गेन श्रेष्ठमर्शोव्रणानां
नाशायालं वर्ण्यं दद्रुघ्नम् ॥ ८० ॥

एरण्डताल्यवननीपकदम्बभार्ङ्गी
कम्पिल्लबिल्वफलिनीसुरवारुणीभिः ।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा
श्रीवेष्टगुग्गुलुशिलापटुतालविश्वैः ॥ ८१ ॥
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ॥ ८२ ॥
कुष्ठाश्वमारभृङ्गार्कमूत्रस्नुक्चोरसैन्धवैः ।
तैलं सिद्धं विषावापमभ्यङ्गात् कुष्ठजित्परम् ॥ ८३ ॥
सिद्धं सिक्थकसिन्दूरपुरतुल्यकताल्यजैः ।
कच्छूं विचर्चिकां चाऽऽशु कटुतैलं नियच्छति ॥ ८४ ॥
लाक्षाव्योषं प्रापुनाटश्च बीजं
श्रीवेष्टं कुष्ठसिद्धार्थकाश्च ।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो
दद्रुघ्नो मूलकोत्थश्च बीजम् ॥ ८५ ॥
चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥ ८६ ॥
लाक्षारसाञ्जनैलापुनर्नवा चेति कुष्ठिनां लेपाः ।
दधिमण्डयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः ॥ ८७ ॥
जलवाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ८८ ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ८९ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्मदले ।
शीताः प्रदेहसेका व्यधनविरेकौ घृतं तिक्तम् ॥ ९० ॥

खदिरसपनिम्बकुटजाः श्रेष्ठाः क्रमिजित्पटोलमधुपर्ण्यः।
अन्तर्बहिःप्रयुक्ताः क्रमिकुष्ठनुदः सगोमूत्राः ॥ ९१ ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रम् ॥ ९२ ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ९३ ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्तते साध्यम् ॥ ९४ ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोनुरक्षता प्राणान्।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ ९५ ॥
पक्षात्पक्षाच्छर्दनान्यभ्युपेयान्
मासान्मासाच्छोधनान्यप्यधस्तात्।
शुद्धिर्मूर्ध्नि स्यात्त्रिरात्रात् त्रिरात्रात्
षष्ठे षष्ठे मास्यसृङ्मोक्षणानि ॥ ९६ ॥
यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ।
निःसन्देहं यात्यसाध्यत्वमेवं
तस्मात् कृत्स्नान्निर्हरेदस्य दोषान् ॥ ९७ ॥
व्रतदमयमसेवात्यागशीलाभियोगो
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री।
शिवशिवसुतताराभास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ॥ ९८ ॥

—o—

# विंशोऽध्यायः ।

अथात श्वित्रकृमिचिकित्सित व्याख्यास्याम ।

कुष्ठादपि बीभत्स यच्छीघ्रतरञ्च यात्यसाध्यत्वम् ।
श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने ॥ १ ॥

संशोधन त्रिशिपात् प्रयोजयेत् पूर्वमेव देहस्य ।
श्वित्रे स्रंसनमग्र्य मलयूरस इष्यते सगुड. ॥ २ ॥

त पीत्वा भक्ततनुर्यथाबलं सूर्यपादसन्तापम् ।
सेवेत विरिक्ततनुस्त्र्यह पिपास पिबेत् पेयाम् ॥ ३ ॥

श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु निस्रु तेषु तु प्रात प्रात. पिबेत् त्रिदिनम् ॥ ४ ॥

मलयमसन प्रियङ्गुं शतपुष्पा चाम्भसा समुत्क्वाथ्य ।
पलाश वा क्षार यथाबल फाणितोपेतम् ॥ ५ ॥

फल्गुखदिरघवल्कलनिर्यूहेणेन्दुराजिकाकल्कम् ।
पीतोपाश्रितस्य जाते स्फोटे तक्रेण भोजन निर्लवणम् ॥६॥

गव्य मूत्र चित्रकव्योषयुक्त
सर्पि कुम्भे स्थापित क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिभि पेयमेतत्
काय्य चास्मै कुष्ठदृष्ट विधानम् ॥ ७ ॥

मार्कमथवा खादेद्भृष्ट तैलेन लोहपावकम् ।
बीजकस्य तत्र दुग्ध तदनुपिबेच्छ्वित्रनाशाय ॥ ८ ॥

पूतीकार्कव्याधिघातस्नुहीना

मूत्रे पिष्टाः पक्षवा जातिजाश्च ।
ग्रन्थ्यालेपाच्छ्वित्रदुर्नामदद्रू-
पामाकोठान् दुष्टनाडीव्रणांश्च ॥ ९ ॥
द्वैप दग्धं चर्म मातङ्गजं वा
श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।
पूतिः कीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति ॥ १० ॥
रात्रौ गोमूत्रे वासितान् जर्जराङ्गा-
नह्निच्छायायां शोषयेत् स्फोटहेतून् ।
एवं वाराः सप्त सिक्तास्ततः श्लक्ष्णपिष्टैः
कृत्वा क्षीरेण श्वित्रनाशाय लेपः ॥ ११ ॥
अक्षतैलकृतो लेपः कृष्णसर्पोद्भवा मषी ।
शिखिपित्तं तथा दग्धं ह्रीवेरं वा तदाप्लुतम् ॥ १२ ॥
कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ १३ ॥
क्षारे सुदग्धे गजलिण्डजे च गजस्य मूत्रेण परिस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं दत्त्वा पचेद्बीजमवल्गुजानाम् ॥१४॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिम्पन् बहुशः प्रघृष्टम् ।
कुष्ठं मषीं वा तिलकालकं वा
यच्चान्यदेवंविधमङ्गजातम् ॥ १५ ॥
भल्लातकद्वीपिसुधार्कमूलं [illegible]त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि [illegible] [illegible] लाङ्गलिकां च पक्त्वा ॥१६॥
स्नुगर्कदुग्धे घनमायसस्थं [illegible] [illegible] तद्विदधीत लेपम् ।

कुष्ठे किलासे तिलकालकेषु मासेषु दुर्नामसु चर्मकीले ॥१७
शुद्धा शोणितमोचैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम्।
श्वित्र कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १८ ॥

## इति श्वित्रचिकित्सा।

### अथ कृमि चिकित्सितम्।

श्विवस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिकोदरे।
सश्लेष्मितकृमिकफे शर्वरीं तां सुखोषिते ॥ १९ ॥
सुरसादिगण मूत्रे क्वाथयित्वार्द्धवारिणि।
त कषाय कणागालकृमिजित् कल्कयोजितम् ॥ २० ॥
सतैलस्वर्जिकाचारं युञ्ज्याद्वस्तिं ततोऽहनि।
तस्मिन्वे व निरूढं त पाययेत विरेचनम् ॥ २१ ॥
चित्रलाक्ष फलकणाकषायालोडित ततः।
शुद्धोध. शाधिते कुर्य्यात् पञ्चकोलयुत क्रमम् ॥ २२ ॥
कटुतिक्तकषायाणा कषायै. परिषेचनम्।
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ २३ ॥
शिरोरोगनिषेधोक्तमाचरेन्मूर्द्धगेष्वनु।
यद्रिक्ततिक्तकटुकमल्पशे ष्च भोजनम् ॥ २४ ॥
विडङ्गक्षारमरिचपिप्पलीमूलशिग्रुभि।
पिबेत् सस्वर्जिकाचारं यवागू तक्रसाधिताम् ॥ २५ ॥
रस शिरीषकिणिहिपारिभद्रककिंशुकात्।
पलाशबीजपत्तूरपूतिकाद्वा पृथक् पिबेत् ॥ २६ ॥
सक्षौद्र सुरसादीन् वा लिह्यात् क्षौद्रयुतान् पृथक्।

यतकल्लोऽखविट् चूर्णं विड्ङ्गक्वाथभावितम् ॥ २७ ॥
क्रिमिमान्मधुना लिह्याद्भावितं वा वरारसैः ।
शिरोगतेषु क्रिमिषु चूर्णं प्रधमनञ्च तत् ॥ २८ ॥
आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ।
पक्त्वा पूपलिकां खादेद्धान्याम्लञ्च पिबेदनु ॥ २९ ॥
सपञ्चकोललवणमसान्द्रं तक्रमेव वा ।
नीपमार्कवनिर्गुण्डीपत्रेष्वप्ययं विधिः ॥ ३० ॥
विड्ङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।
विड्ङ्गतण्डुलैर्युक्तमर्धांशैरातपस्थितम् ॥ ३१ ॥
दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।
सुराह्वसरलस्नेहं पृथगेवं प्रकल्पयेत् ॥ ३२ ॥
पुरीषजेषु सुतरां दद्याद् बस्तिविरेचने ।
शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥
रक्तजानां प्रतीकारं कुर्यात् कुष्ठचिकित्सितात् ।
इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ३४ ॥

चीराणि मांसानि घृतं गुडञ्च
दधीनि शाकानि च पर्णवन्ति ।
समासतोऽम्लान्मधुरान् रसांश्च
क्रमीन् जिहासुः परिवर्जयेच्च ॥ ३५ ॥

---

## एकविंशोऽध्यायः ।

---::०::---

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।

केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ।
वायुं सर्पिर्वसामज्जातैलपानैर्नरं ततः ॥ १ ॥
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत्पुनः ।
यूषैर्ग्राम्योदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥
पायसैः कृसरैः साम्ललवणैः सानुवासनैः ।
वातघ्नैस्तर्पणैश्चान्नैः सुस्निग्धैः स्नेहयेत्ततः ॥ ३ ॥
स्वभ्यक्तं स्नेहसंयुक्तैः सङ्करायैः पुनः पुनः ।
स्नेहाक्तं स्विन्नमङ्गन्तु वक्रं स्तब्धं सवेदनम् ॥ ४ ॥
यथेष्टमानामयितुं सुखमेव हि शक्यते ।
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ५ ॥
शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ।
हर्षतोदरुगायामशोफस्तम्भग्रहादयः ॥ ६ ॥
स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ।
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ॥ ७ ॥
बलमग्निबलं पुष्टिं प्राणं चाप्यभिवर्द्धयेत् ।
असकृत्तं पुनः स्नेहैः स्वेदैश्च प्रतिपादयेत् ॥ ८ ॥
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ।
यद्येतेन सदोषत्वात् कर्म्मणा न प्रशाम्यति ॥ ९ ॥
मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत् ।
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥ १० ॥
पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम् ।
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥
स्रोतो बध्वाऽनिलं रुध्यात्तस्मात्तमनुलोमयेत् ।
दुर्बलो यो विरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ १२ ॥

दीपनैः पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ।
संशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १२ ॥
आमाशयगते वायौ वमितप्रतिभोजिते ।
सुखाम्बुना षट्चरणं वचादिं वा प्रयोजयेत् ॥ १४ ॥
संधुक्षितेऽग्नौ परतो विधिः केवलवातिकः ।
मत्स्यान्नाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥ १५ ॥
बस्तिकर्म त्वधोनाभेः शस्यते चावपीडकः ।
कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ १६ ॥
हृत्स्थे पयः स्थिरासिद्धं शिरोबस्तिः शिरोगते ।
स्नैहिकं नावनं धूमः श्रोत्रादीनां च तर्पणम् ॥ १७ ॥
स्वेदाभ्यङ्गानि वातानि हृद्यं चान्नं त्वगाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १८ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जागतं जयेत् ॥ १९ ॥
प्रहर्षोऽन्नं च शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥
विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत् क्रियाम् ।
गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥ २१ ॥
सिताकाश्मर्यमधुकैः सिद्धमुत्थापने पयः ।
स्नायुसन्धिशिराप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
आगारधूमलवणतैललेपः स्रुतेऽसृजि ॥ २३ ॥
सुप्तेऽङ्गे वेष्टयुक्ते तु कर्तव्यमुपनाहनम् ।
पत्रापतानकेनार्कमस्फोताधमदेपनम् ॥ २४ ॥

अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम् ।
अखट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥
तत्र प्रागेव सुस्निग्धं स्विन्नाङ्गं तीक्ष्णनावनम् ।
स्रोतोविशुद्धये युञ्ज्यादच्छपानं ततो घृतम् ॥ २६ ॥
विदार्यादिगणक्वाथदधिक्षीररसैः शृतम् ।
नातिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥ २७ ॥
कुलत्थयवकोलानि भद्रदार्वादिकं गणम् ।
निःक्वाथ्यानूपमांसञ्च तेनाम्लैः पयसापि च ॥ २८ ॥
स्वादु स्कन्धप्रतीवापं महास्नेहं विपाचयेत् ।
सेकाभ्यङ्गावगाहान्नपानतस्यानुवासनैः ॥ २९ ॥
संहन्ति वातं ते ते च स्नेहस्वेदाः सुयोजिताः ।
वेगान्तरेषु मूर्द्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥
अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिवर्हणैः ।
श्वसनासु विमुक्तासु तथा संज्ञां स विन्दति ॥ ३१ ॥
सौवर्चलाभयाव्योषसिद्धं सर्पिर्बलेऽधिके ।
पलाष्टकं तिल्वकतो वरायाः प्रस्थं पलांशं गुडपञ्चमूलम् ॥३२
सैरण्डसिद्धेऽष्टिवतं घटेऽर्धा पक्त्वा पचेत्प्रादभृतेन तेन ।
दध्नः पात्रे यावशूकाच्च बिल्वे. सर्पिःप्रस्थं हन्ति तत्सेव्यमानम् ।
दुष्टान् वातानेकसर्वाङ्गसंस्थान्योनिव्यापद्गुल्मवर्धोदरञ्च ॥३३॥
विधिस्तिल्वकवत्स्नेहो शम्याकाशोकयोरपि ।
चिकित्सितमिदं कुर्याच्छुद्धवातापतानके ॥ ३४ ॥
संरुद्धेऽपि सहष्टं चूर्णयित्वा काञ्जिके ।
तुम्बरूण्यभयाहिङ्गु पौष्करं लवणत्रयम् ॥ ३५ ॥
यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्यपतन्त्रके ।

हिङ्गु सौवर्चलं शुण्ठी दाडिमं साम्लवेतसम् ॥ ३६ ॥
पिबेद्वा स्नेहमपवनस्त्रीगोत्रस्त्र अस्यति ।
आयामयोरर्दितवद्बाह्याभ्यन्तरयो: क्रिया ॥ ३७ ॥
तैलद्रोण्याश्च शयनमान्तरोऽत्र सुदुस्तर: ।
विवर्णदन्तवदन: स्रस्ताङ्गो नष्टचेतन: ॥ ३८ ॥
प्रस्विन्नश्च धनुष्कम्पी दशरात्रं न जीवति ।
वेगेष्वतोऽन्यथा जीवन्मन्देषु विनतो जड: ॥ ३९ ॥
खञ्ज: कुणि: पक्षहत: पङ्गुलो विकलोऽथवा ।
हनुस्रंसे हनुस्थानस्विन्नो स्वस्थानमानयेत् ॥ ४० ॥
उन्नामयेच्च कुशलश्चिबुक विवृते मुखे ।
नामयेत् संवृते शेषमेकायामवदाचरेत् ॥ ४१ ॥
जिह्वास्तम्भे यथावस्थं कार्यं वातचिकित्सितम् ।
अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ॥ ४२ ॥
सशोफे वमनं दाहरागयुक्ते सिराव्यध: ।
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ ४३ ॥
अवबाहौ हितं नस्यं स्नेहश्चोत्तरभक्तिक: ।
ऊरुस्तम्भे न च स्नेहो न च संशोधनं हितम् ॥ ४४ ॥
श्लेष्मामभेदोबाहुल्याद्युक्त्या तत्क्षपणान्यत: ।
कुर्याद्रूक्षोपचारश्च यवश्यामाककोद्रवा: ॥ ४५ ॥
शाकैरलवणै: शस्ता: किञ्चित्तैलैर्जलै: शृतै: ।
जाङ्गलैरघृतैर्मांसैर्मध्वम्भोऽरिष्टपायिन: ॥ ४६ ॥
वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैन्धव: ।
आमवाते सुखाम्भोभि: पेय: षट्चरणोऽथवा ॥ ४७ ॥
लिह्यात् क्षौद्रेण वा श्यूषणपथ्यातिक्ताकणाघनान् ।

कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ४८ ॥
मूत्रैर्वा शीलयेत्पथ्या गुग्गुलु गिरिसम्भवम्।
श्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ॥ ४९ ॥
खादन् सर्वान् जयेद्व्याधीन् मेद श्लेष्मामवातजान्।
मारुत्यैव कफाक्रान्ताः समेदस्काः प्रभञ्जनः ॥ ५० ॥
क्षारमूत्रान्वितान् स्वेदान् सेकानुद्वर्त्तनानि च।
कुर्य्याच्छिलाञ्च मूत्राद्यैः करञ्जफलसर्षपैः ॥ ५१ ॥
मूलैर्वाप्यर्कतर्कारीनिम्बजैः ससुरास्यैः।
सक्षौद्रमयेर्गाम्भसक्लीबयल्मीकमृत्तिके ॥ ५२ ॥
कफक्षयार्थं व्यायामे सह्ये चैन प्रवर्त्तयेत्।
स्थलान्यमहृयेसारीः शक्तितः परिशीलयेत् ॥ ५३ ॥
स्थिरतोय सरःचैम प्रतिस्रोतो नदीं तरेत्।
श्लेष्ममेदःक्षये चात्र स्नेहादीनवचारयेत् ॥ ५४ ॥
स्वामदृष्यादि चालोच्य कार्य्या शेषेष्वपि क्रिया।
कृषचर सुरदारुसनागरं क्वथितमम्भसि तैलविमिश्रितम्।
पवनपीडितदेहगतिः पिबेद् द्रुतविलम्बितगोभवतीच्छया ५५
रास्नामहौषधदीपिपिप्पलीग्रन्थिपौष्करम्।
पिष्टा पिपासेत्तपिबोतरोगहरं परम् ॥ ५६ ॥
निम्बामृताहृषपटोलनिदिग्धिकानां
भागान् पृथग् दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितरसेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ ५७ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः।

तेजोवतीमरिचवल्कदीप्यकाग्नि
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ५८ ॥
मञ्जिष्ठयातिविषया विषया यवान्या
सगुडगुग्गुलुपलैरपि पञ्चसङ्ख्यैः ।
तत्सेवित प्रधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमोहक् ॥ ५९ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसकासशोफ
हृत्पाण्डुरागमदविद्रधिवातरक्तम् ॥ ६० ॥

बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ॥ ६१ ॥
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा ।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६२ ॥

जीर्णपिण्याकपञ्चमूलपृथक्च
क्वाथ्यं द्वाभ्यामेकतस्तैलमाभ्याम् ।
क्षीरं दध्नाम्लाप्युपयोगेन पानाद्-
वाता नश्येयुः श्लेष्मयुक्तादिशेषात् ॥ ६३ ॥

प्रसारिणी तुलाक्वाथे तैलप्रस्थं पयः समम् ।
हिमैरामिश्रिमञ्जिष्ठाकुष्ठरास्नाकुचन्दनैः ॥ ६४ ॥
जीवकर्षभकाकोलीयुगलामरदारुभिः ।
कल्कितैर्विपचेत्सम्यग्[illegible]गगम् ॥ ६५ ॥

समूलशाखस्य सप्र[illegible] [illegible] दशमूलतय
पलानि पक्त्वा[illegible] [illegible]पदिहडिपाम् ।

तत्र सैव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुगिलाजैः
लोहितानलदलोहसुराह्वैः कोपनामिषितुरुष्कनतैश्च ॥६६
तुल्यक्षीरम्भालिकैस्तैलपात्रं सिद्धं कृच्छ्रानश्रीलितं हन्त्यिवातान्
कम्पाक्षेपस्तम्भशोषादियुक्तान्गुल्मोन्माटौघोनसर्वानिरोगान्६७
सहाचरतुलायाश्च रसे तैलाढकं पचेत् ।
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥ ६८ ॥
अथवा नतपट्ग्रन्थास्थिराकुष्ठसुराह्वयान् ।
सैलानलदशैलेयशताह्वारक्तचन्दनान् ॥ ६८ ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ।
मेडस्य सम्मत तैलं तत्कृच्छ्रानिलामयान् ॥ ७० ॥
वातकुण्डलिकोन्मादगुल्मवर्धादिकान् जयेत् ।
बलाशत छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७१ ॥
जलाढकं शते पक्त्वा शतभागस्थिते रसे ।
दधिमस्त्विक्षुनिर्यासशुक्लैस्तैलाढकं समैः ॥ ७२ ॥
पचेत्साजपयोऽर्द्धांशं कल्कैरेभिः पलोन्मितैः ।
शठीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ ७३ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७४ ॥
पलाशरसकस्तूरीनलिकाजातिकोशकैः ।
स्पृक्काकुङ्कुमशैलेयजातिकाकटुफलाम्बुभिः ॥ ७५ ॥
त्वक्कुन्दरुककर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ ७६ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः ।
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ॥ ७७ ॥

पञ्चकल्कं ततः पूतं विधिना तत्प्रयोजितम् ।
कासश्वासज्वरच्छर्दिमूर्च्छागुल्मक्षतक्षयान् ॥ ७८ ॥
प्लीहशोषमपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ७९ ॥

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः ।
दुष्टान्वातानाशु शान्तिं नयेयु-
र्वन्ध्यानारीः पुत्रभाजश्च कुर्युः ॥ ८० ॥

स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः ।
पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेत् ॥ ८१ ॥

—·—

## द्वाविंशोऽध्यायः ।

—०✿०—

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ।
वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥ १ ॥
रुग्रागतोददाहेषु जलौकाभिर्विनिर्हरेत् ।
शृङ्गतुम्बैश्चिमिचिमाकण्डूयनान्वितम् ॥ २ ॥
प्रच्छानेन सिराभिर्वा देशाद्देशान्तरं व्रजेत् ।
अङ्गग्लानौ तु न स्राव्यं रूक्षं वातोत्तरं च यत् ॥ ३ ॥
गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुसिरामयान् ।
ग्लानिमन्यांश्च वातोत्थान् कुर्याद्वायुरसृक्क्षयात् ॥४॥

विरेच्य. स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनैः ।
वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम् ॥ ५ ॥
श्रावणीक्षीरकाकोलीक्षीरिणीजीवकैः समैः ।
सिद्धं सर्षपकैः सर्पिः सक्षीरं वातरक्तनुत् ॥ ६ ॥
द्राक्षामधूकवारिभ्यां सिद्धं वा ससितोपलम् ।
घृतं पिबेत्तथा क्षीरं गुडूचीस्वरसे शृतम् ॥ ७ ॥
तैलं पयः शर्कराञ्च पाययेद्वा सुमूर्च्छितम् ।
बलाशतावरीरास्नादशमूलैः सपीलुभिः ॥ ८ ॥
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः ।
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम् ॥ ९ ॥
पैत्ते पद्मा वरी तिक्ता पटोलत्रिफलामृताः ।
पिबेद्घृतं वा क्षीरं वा स्वादु तिक्तकसाधितम् ॥१०॥
क्षीरेणैरण्डतैलं च प्रयोगेण पिबेन्नरः ।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः ॥ ११ ॥
कषायमभयानां वा पाययेद्घृतभर्जितम् ।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥ १२ ॥
निरूहा मल तस्य सघृते क्षीरबस्तिभिः ।
नहि बस्तिसमं किञ्चिद्वातरक्तचिकित्सितम् ॥ १३ ॥
विमियात्पायुपार्श्वोरुपर्वास्थिजठरार्तिषु ।
मुस्तद्राक्षाहरिद्राणां त्रिफलायाः कफात्मके ॥ १४ ॥
सक्षौद्रं त्रिफलाया वा ग[illegible]ची [illegible] यथा तथा ।
यथाहेम्ह इपीत च [illegible] [illegible] ॥ १५ ॥
त्रिफलाद्यौवन[illegible] [illegible]री[illegible] [illegible]राम ।
विडङ्ग पिप्पलीमूलं [illegible] [illegible] ॥ १६ ॥

त्रुटिं लाङ्गलिकं पथ्यां समभागानि पेषयेत् ।
कल्कैर्लिप्तायसीं पात्रीं नध्याह्ने भक्षयेदिदम् ॥ १७ ॥
वातास्रे सर्वदोषेऽपि परं शूलान्विते हितम् ।
कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥ १८ ॥
कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति ।
पञ्चमूलस्य धात्र्या वा रसैर्लीनतरां वसाम् ॥ १९ ॥
गुडं सुरूढमप्यङ्गे ब्रह्मचारी पिबन् जयेत् ।
इत्याभ्यन्तरमुद्दिष्टं कर्म बाह्यमतः परम् ॥ २० ॥
आरनालाढके तैलं पादसर्जरसं शृतम् ।
प्रभूते खजितं तोये ज्वरदाहार्तिनुत्परम् ॥ २१ ॥
समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २२ ॥
दशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपकशूलार्ते कोष्णैर्दाहे तु शीतलैः ॥ २४ ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।
निक्वाथैर्जीवनीयानां पञ्चमूलस्य वा लघोः ॥ २५ ॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ।
सेकार्थं तण्डुलक्षौद्रं शर्कराम्भश्च शस्यते ॥ २६ ॥
प्रियाः प्रियंवदा नार्यश्चन्दनार्द्रकरस्तनाः ।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ २७ ॥
सरागे सरुजे दाहे रक्तं हृत्वा प्रलेपयेत् ।
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ॥ २८ ॥

ससितोत्पलकासेरुमसूरैरकसक्तुभिः ।
लेपो रुग्दाहवीसर्परागशोफनिबर्हणः ॥ २८ ॥
वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः ।
तिलसर्षपपिण्डैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥
औदका प्रसहानूपवेसवाराः सुसंस्कृताः ।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥ ३१ ॥
स्तम्भतोदरुगायामशोफाङ्गग्रहनाशनाः ।
जीवनीयौषधैः सिद्धाः सपयस्का वसाऽपि वा ॥ ३२ ॥
घृतं सहचरान् मूलं जीवन्तिच्छागलं पयः ।
लेपः पिष्टा तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ ३३ ॥
क्षीरपिष्टमुमासीयमेरण्डस्य फलानि वा ।
कुर्यात् शूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके ॥ ३४ ॥
मूत्रक्षारसुरापक्वं घृतमभ्यञ्जने हितम् ।
सिद्धं समधुशुक्तं वा सेकाभ्यङ्गाः कफोत्तरे ॥ ३५ ॥
गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ ३६ ॥
मधुशिग्रोर्हितं तद्वीजं धान्याम्लसंयुतम् ।
मूहुर्तलिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ ३७ ॥
उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ।
विरेकास्थापनैः स्नेहपानैर्गम्भीरमाचरेत् ॥ ३८ ॥
वातश्लेष्मोत्तरे कोष्णा लेपादास्तत्र शीतले ।
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ३९ ॥
पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ।

एते स्थानस्य गाम्भीर्य्याल्लिंध्येयुर्य्यदतो न वा ॥ ५२ ॥
तस्माज्जयेन्नवानेतान् बलिनो निरुपद्रवान् ।
वायौ पित्तावृते शीतामुष्णाञ्च बहुशः क्रियाम् ॥ ५३ ॥
व्यत्यासाद् योजयेत्सर्पिर्जीवनीयञ्च पाययेत् ।
धन्वमांसं यवाः शालिर्विरेकः क्षीरवान्मृदुः ॥ ५४ ॥
सक्षीरा वस्तयः क्षीरं पञ्चमूलबलान्वितम् ।
कालेऽनुवासनं तैलं मधुरौषधसाधितम् ॥ ५५ ॥
यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ।
पञ्चमूलकषायेण वारिणा शीतलेन च ॥ ५६ ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७ ॥
पुराणसर्पिस्तैलञ्च तिलसर्षपजं हितम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥ ५८ ॥
कारयेद्रक्तसंसृष्टे वाते शोणितिकीं क्रियाम् ।
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितः ॥ ५९ ॥
प्रमेहमेदोवातघ्नमाढ्यवाते भिषग्जितम् ।
मज्जास्थिस्थेऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते ॥ ६० ॥
अन्नावृते पाचनीयं वमनं दीपनं लघु ।
मूत्रावृते मूत्रलानि स्वेदा उत्तरवस्तयः ॥ ६१ ॥
एरण्डतैलं वर्चःस्थे वस्तिस्नेहाश्च भेदिनः ।
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ॥ ६२ ॥
सर्वस्थानावृते त्वाशु तत्कार्य्यं मातरिश्वनि ।
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम् ॥ ६३ ॥
याचना वस्तयः प्रायो मधुराः सानुवासनाः ।

प्रसमीक्ष्य बलाधिक्यं मृदुकायविरेचनम् ॥ ६४ ॥
रसायनानां सर्वेषामुपयोगः प्रशस्यते ।
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ॥ ६५ ॥
लेहो वा भार्ङ्गवस्तद्वदेकादशसितासितः ।
अपाने त्वावृते सर्वं दीपनं ग्राहिभेषजम् ॥ ६६ ॥
वातानुलोमनं कार्यं मूत्राशयविशोधनम् ।
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ॥ ६७ ॥
प्राणादीनां भिषक्कुर्याद्वितर्क्य स्वयमेव तत् ।
उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ ६८ ॥
समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजयेत् ।
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ॥६९॥
स्वं स्वं स्थानं नयेदेवं वृतान्वातान्विमार्गगान् ।
सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम् ॥ ७० ॥
रसायनविधानेन लशुनो हन्ति शीलितः ।
पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥
रक्तावृतेऽपि तद्वच्च खुड्डाकं यच्च भेषजम् ।
रक्तपित्तानिलहरं विविधं च रसायनम् ॥ ७२ ॥
यथानिदानं निर्दिष्टमिति सम्यक्चिकित्सितम् ।
वायुर्वेदकर्म स्थानभेदाद्योःशिनाशनम् ॥ ७३ ॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।
भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधम् ॥ ७४ ॥

